॥ श्रीनटेशनवरत्नमालिका ॥

॥ श्रीः ॥

प्रपन्नजनसन्दोह-प्रत्यह-ध्वान्त-भास्करम् ।
अमृतांशुकलाचूडं कुञ्जरास्यमुपास्महे ॥ १॥

आजानुबाहुमरविन्ददलायताक्ष-
मानीलदेहमसुरद्विषमब्जवक्त्रम् ।
अम्बोधिजाधिपवाङ्मनसावगम्यं
गोविन्द्राजमनुचिन्तय चित्त नित्यम् ॥ २॥

यस्याहुर्महिमानमागमविदो वाङ्मानसाध्वातिगं
प्रापुर्यन्नटनावलोकनवशान्मुक्तिं फणिशादयः ।
यड्ढक्कानिनदारुणो हृदयगं प्रोन्मार्ष्टि नृणां तपः
स श्रीकन्त-विधीन्द्र-वन्द्य-चरणो दद्यान्नटेशश्शिवम् ॥ ३॥

नृत्यं त्वदीयमवलोक्य नटेश पूर्व-
मानन्दतुन्दिलहृदो मुनयो बभूवुः ।
तद्दर्शयाद्य मम मोदमुपैमि चाहं
निष्पक्षपात भवतस्सम एव सर्वः ॥ ४॥

नन्दादयोऽपि नटराज पुरालभन्त
भक्त्या पदांबुजयुगे तव बन्धमोकम् ।
देयाद्य सा न किमु मे करुणांबुराशे
को वा मया व्यरचि तं वद तेऽपराधः ॥ ५॥

कस्मान्नटेश कुरुषे न कृपां मयि त्वं
किं वा त्वया न विदितो मम दीनभावः ।
जानाति नो यदि भवान्मम दीनतां तत्
श्रुत्युक्तमीश वितथं किमु सर्ववित्त्वम् ॥ ६॥

संसृत्युदन्वति नटेश सदाऽप्यगाधे
मग्नं न मां चिरमुदासितुमर्हसि त्वम् ।
यद्यप्यहं तव चकार बहून् हि मन्तून्
शंभो तवाऽपि न हि तान् गणयान्तरङ्गे ॥ ७॥

दुःखांबुदौ पतितमीश समुद्धरैनं

नोचेच्छरण्य न हि मे क्षतिरस्ति कापि ।
भूयान्निमज्जनमकीर्तिपयोनिधौ ते
सर्वेश्वरस्य भवतो न हि युक्तमेतत् ॥ ८। ।
पादांबुजातयुगलं तव यो भजेत
हन्ताधिरोहति हि तस्य ललाटमग्निः ।
वक्षस्थलं विषधरो विषमुत्तमाङ्गं
कण्ठञ्च पार्श्वभुजमस्य पिशाचवर्गाः ॥ ९॥

त्वामामनन्ति नटनाथ पदाब्जभाजां
सर्वार्थदायिनमहो निखिलाश्च वेदाः ।
त्वं चोरयस्यहह शोकमशेषमेषां
अन्यादृशी विलसतीश वदान्यता ते ॥ १०॥

सर्वेश्वरोऽपि नटराज दिगंबरस्त्वं
वाहो वृषस्तव गिरौ शयनं पिशाचाः ।
मित्राणि भूषणमहो भुजगश्च भस्म
भिक्षामटस्यपि च नृत्यसि नित्यमेव ॥ ११॥

तातो भवान्मम तनूभव एष तेऽहं
सर्वेश्वरोऽस्यहमपीश नितान्तदीनः ।
एतादृशं न किल मां परिरक्षसि त्वं
प्रेमात्मजेष्वसदृशं भवतो विभासि ॥ १२॥

श्रीमन्नटेश-चरणाब्ज-समर्प्यमाणं
श्रीरामशर्म-कलितां नवरत्नमालां ।
सन्तो विलोक्य परिहृत्य समस्त-दोषान्
गृह्णन्तु पूर्णकृपया गुणमल्पमेव ॥ १३॥

॥ श्रीनटेश नवरत्नमालिका समाप्ता ॥